अनोद्भूलं अत्रावयवावयविसं० जन्यजनकसं यथा पितुः पुत्रः मातुर्दुहिताधे
नोर्वत्सः अत्र जन्यजनकसंबंधेषष्ठी अलेर्भृ पादः पत्र भुवोवचि अस्तीति स्वस्वा
देशसंबंधषष्ठी एवमन्यत्रापिज्ञेया साचशेषेषष्ठी अथाधारश्चतुर्विधः औपश्ले
षिकं अभिव्यापकं तत्रौपश्लेषिकं यथा काष्ठेप्रातिष्ठति विश्वम्भरः मथुरायाम्
रिवसति अयोध्यायांरामश्चास्ते गृहेतिष्ठतिगृहस्थः काष्ठामौपश्लेषिकऽधा
रेसप्तमी वैषयिकंयथा नभसिचन्द्रोराजते अम्बुधौहरिर्वसति जलेमत्स्यास्ति
ष्ठन्ति आकाशेपक्षिणः सन्ति नभसीतिवैषयिकाऽधारेसप्तमी अभिव्यापकंय
था जगतिविश्वम्भरोवर्तते दधिनिघृतमास्ते जलेप्राणोवर्तते भूतेषुप्राणो
वर्तते जगतीत्यभिव्यापकाधारेसप्तमी सामीपकंयथा गङ्गायांघोषः सप्त ॥
म्यधिकरणेसप्तमी इतिसप्तविभक्त्यवतारः ॥ ॥ ॥

सम्प्रदानसञ्ज्ञके संप्रदाने चतुर्थीविभक्तिर्भवति अपादानं द्विधामतं चलमचलं
च तत्र चलं यथा धावतोऽश्वात्पतितोऽश्ववाहिकः अपसरतो मेघादपसरति मेघः
गंगाश्रोतसः प्रसरन्ति महाग्राहः अश्वादिति चलापादाने पंचमीत्यादि अचलं य
था वृक्षात्पर्णं पतति ग्रामादागच्छति पथिकः जलादुत्तिष्ठते मत्स्यः व्याघ्राद्वि
भेति मृगः वृक्षादिति अचलापादाने पंचमीत्यादि अपायेयदुदासीनं चलं वाय
दि वाचलं ध्रुवमेवतदावेशात्तदपादानमुच्यते १ ध्रुवमपायेऽपादानमिति सम्प्रदा
न सञ्ज्ञा अथ संबंधश्चतुर्विधः स्वस्वामिसेवकसं० अवयवावयविसं० स्वस्था
देश्यसं० अथ स्वस्वामिसेवकसं० यथा राज्ञः स्वस्वामिसेवकसं० षष्ठी अवय
वावयविसं यथा शिशोः पादः अश्वस्य शिरः उष्ट्रस्य ग्रीवा करिणो हस्तः

णीयेनितृतीयाविभक्तिर्भवति संप्रदानं त्रिधामतं यथा प्रेरकमनुमन्तृकमनिराकर्तृ
कं च तत्र प्रेरकं यथा विष्णवे त्रिभुवनं ददाति बलिः विष्णवे प्रेरकसम्प्रदाने चतुर्थी
विप्राय गां ददाति धार्मिकः विश्वेश्वराय मठं ददाति पुण्यवान् इत्यादि आह विष्णुः
मह्यं त्रिभुवनं देहि इति प्रेरकसम्प्रदानमुच्यते अनुमन्तृकं यथा अतिथये फलमू
लं ददाति गृहस्थः भिक्षुकाय भिक्षां ददाति श्रद्धावान् काशीवासिने मठं ददाति
सुकृती अतिथये अनुमन्तृकसंप्रदाने चतुर्थी स ह्यतिथिः फलमूलं मन्यते तेनानुमं
न्तृकमुच्यते अनिराकर्तृकं यथा विश्वेश्वराय पुष्पं ददाति साधुः नारायणाय
पुष्पं ददाति सज्जनः शिवाय नैवेद्यं ददाति शैवः गंगायै पुष्पं ददाति धार्मिकः
नारायणायकर्तृकसंप्रदाने चतुर्थी स हि नारायणः पुष्पार्थं न प्रेरयति दीयमानम
नुमन्यते दीयमानमनिराकर्तृक इत्यनिराकर्तृकमुच्यते सर्वत्र कर्मणायमभिप्रेत

बाह्यमाभ्यन्तरत्व=४

नंयदा कर्त्तरिलकाराविधीयंतेतदाऽनुक्तकर्त्तृकर्म्मभवति तत्रानुक्तेकर्म्मणिद्वितीयेतिद्वितीयावि
भक्तिर्भवति यदाकर्म्मणिलकाराभवन्ति तदाप्रातिपदिकेत्यादिनाप्रथमा गतिबुद्धिप्रत्यव
सानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्तासणौ इति अणिणन्तस्यधातोःकर्त्तुर्ण्यर्थेकर्म्मसञ्ज्ञा
भवतीति करणंद्विविधं यथाऽभ्यन्तरकरणाभ्यन्तमाभ्यन्तरत्वं शरीरावयवाबाह्यत्वम् तत्राभ्य
न्तरंयथा मनसानारायणंस्मरति शुद्धावासुदेवंध्यायतिभक्तः चित्तेनविश्वेश्वरंधारयतिधीरः
चित्तेनस्त्रियंधारयतिकामातुरः अहंकारेणशिवमभिमन्यतेज्ञानी मनसेतिआभ्यन्तरेकरण
तृतीया बाह्यंयथा रथेनद्वारकाङ्गच्छतिहरिः वृषेणकैलाशंव्रजतिशिवः ऐरावतेनामरा
वतीम्प्रयातिपुरन्दरः अश्वेनग्रामंव्रजतिधनिकः कलशेनजलंगृह्णातिगृहस्थः कुशा
नसंधांविदधाति ब्रह्मचारीफलेनस्वयोषणांकुरोतिवनी दण्डेनभिक्षार्थमटतिभिक्षुः र
थेनेनिवाह्यकरणेतृतीया इत्यादि साधकतमंकरणमितिकरणसञ्ज्ञा कर्त्तृकरणयोस्तृ

नेपित्रा एतेषांधातूनांयदाल ऽकर्म चेत्यादिनाकर्मणिलकाराभवन्ति तदोक्ताकथितंदुर्म्मभवति
तदउक्तमकथितंकर्मणि उक्तन्यायेनप्रथमाभवति तदुक्तम् प्राधान्येकर्मणयाख्येयेलादीनांदु
द्विकर्म्मणाम् अप्रधानेदुहादीनांरायन्तेकर्तुश्चकर्म्मणः १ सर्वत्राकथितंचेतिकर्मसंज्ञा
कर्म्मणिद्वितीयेतिउक्तेकर्म्मणिद्वितीया उक्तेकर्म्मणिप्रथमा कर्तृकर्म्मद्विविधं उक्तकर्तृक
र्म अनुक्तकर्तृकर्म्म तत्रानुक्तकर्तृकर्म्म यथागच्छति(पथिकः)ग्रामंभृत्यः गमयतिग्रामंधनीभृत्य
अधीतिशास्त्रंशिष्यउपाध्यायः अध्ययन्तेवालः अध्यापयन्तेवालम्पिता अधीतेवेदंब्रह्मचारी
अध्यापयतिवेदंब्रह्मचारिणमुपाध्यायः गृहेतिष्ठतीतिगृहस्थः गृहेस्थापयतिगृहस्थं वि
श्वेश्वरः काशीपावासयतितं यमीकाशीप्यावसति उक्तकर्तृकर्म्म यथागम्यते ग्रामंपथिकोधनिना
वोध्यतेशास्त्रंशिष्यउपाध्यायेन अध्याप्यतेऽवालः पित्राअध्याप्यतेवेदंब्रह्मचारी उपाध्यायेन
गृहेस्थाप्यतेगृहस्थः राज्ञाविश्वेश्वरेणकाशीमावास्यतेयती एतेषांधातूनांहृतकृजना

कर्म्म तेनन प्तिवद्यते तदनीप्सितङ्कर्म्म उक्तानुक्तभेदाद्द्विधा तथाप्युक्तं चानीप्सितं कर्म्मेति कर्म्मसं
...त्पतितं ह्यो
...वहरति वा ज्ञा ईप्सितानीप्सितङ्कर्म्म यथापायसम्भक्षयन् विजालं स्पृशति कुमारः ग्रामङ्गच्छन् उपसर्पति
२
वृक्षं तृणपत्रं स्पृशति पायसमीप्सितङ्कर्म्म भक्षयन् कर्त्तृ विशेषणं अभ्रवहरति कुमारः स्व
क्रिया
तन्त्रः कर्त्ता स्वजसेप्सितत्वात् अविदितत्वात् तेनानभक्षणम् यदेवन्तदनीप्सितं कर्म्म सर्वत्रापि बोध्यम्
तथाप्युक्तञ्चानीप्सितङ्कर्म्मेति कर्म्मसंज्ञा कर्म्मणि द्वितीया विभक्तिर्भवति अकथितङ्कर्म्म द्विविधं उ
क्ताऽकथितङ्कर्म्म उक्ताऽकथितं कर्म्म तथानुक्ताकथितङ्कर्म्म यथा गां दोग्धि दुग्धं गोपालः राजा
नं सुवर्णं याचते भिक्षुकः व्रजमवरुणद्धि गां गोपालः गुरुं धर्मं पृच्छति शिष्यः शिष्यं धर्म्मं ब्रूते आ
नै
चार्य्यः शिष्यं शास्ति पिता गामत्रुक्ताऽकथितं कर्म्म दोग्धि क्रिया दुग्धमनुक्तं कर्म्म गोपालः स्व
तन्त्रः कर्त्ता उक्ताकथितं कर्म्म यथा गौर्दुह्यते दुग्धं गोपालेन राजा सुवर्णं याच्यते भिक्षुकेन व्रज
शिष्यो
मवरुध्यते गौः गोपालेन सम्पृच्छ्यते गुरुः शिष्येण धर्ममुच्यते गुरुणा शिष्यः शास्तः शिष्य

णांयात्नंनां यदा कर्मणि लादयः तदा चोक्तेप्सितङ्कर्म प्रथमा तत्र निरीक्षिता १ कर्तुरीप्सितङ्कर्म कर्म
णि द्वितीया इति विभक्तिर्भवति तदुक्तं कर्तुरीप्सिततमत्वेन पञ्चवस्तु विवहितं तदीप्सितङ्कर्म उक्ता
नुक्तभिदाद्विधम् १ अनीप्सितङ्कर्म यथा विषं खादयति क्रुद्धः कण्टकं मर्द्दन्यालः गङ्गां गच्छन्ना
नं गच्छन्ति पापङ्करोति दुर्बुद्धिः कल्याणमपि धर्म्मं प्रलपन्ति पापबुद्धयः विषं मनुक्तानीप्सितं
कर्म्म खादयति क्रुद्धः स्वतंत्रः कर्त्ता एवमन्यत्रापि उक्तानीप्सितं कर्म्म यथा विषं खाद्यते क्रुद्धेन
कंटकं मर्द्यते पापं क्रियते दुर्बुद्धिना इत्यादिवत् उक्तानीप्सितं कर्म्मणि प्रथमा खाद्यते क्रियाक्रु
द्धेनेत्यभिहितकर्त्तरि तृतीया एवमन्यत्रापि तथाप्युक्तानुक्तानीप्सितङ्कर्मेति कर्म संज्ञा एवं
धात्नंनां लः कर्मणि वाच्ये यादिना यदा कर्त्तरि विधीयते तदानुक्तानीप्सितङ्कर्म भवति तत्रानु
क्तानीप्सितं कर्म्मणि द्वितीयेति द्वितीया विभक्तिर्भवति तदा तेषामेव धात्नंनां कर्म्मणि लकार
स्तदानीप्सितङ्कर्म भवति तस्मिन्नुक्तन्यायेन विभक्तिर्भवति यदा कर्तुरनियतत्वं
तदा भवन्ति तदोक्तानीप्सितङ्क

नंस्वंइतिसाधुः नारायणंव्याहरति सुतुष्यद्भूक्रानिर्वासनः पृथ्वींविक्रमतेईश्वरः शुक्रं स्त्रियं सि
ञ्चतिप्रजार्थी भुरीबंत्यजतिगुरुवः तथाधर्म्मंजानातिनः हरिम्भावयतिमनीषि दुर्विनय
मपिधर्मंश्रद्दधातु उदारधीरित्यादि एतेषांधातूनां यदालः कर्म्मणिचेत्यादिनाकर्त्तरिल
काराभवन्ति तदाउक्तेसतिकर्मणिद्वितीयाविभक्तिर्भवति तदुक्तम् सकर्मकाणांधातूनांय
दाकर्त्तरिलादयः तदानुक्तेसतितद्कर्म्मणिद्वितीयातत्रकीर्तिता १ उक्तेसतिकर्म्म यथाद्वारका
गम्यतेहरिणा मथुराश्राव्यतेगोपालेन अयोध्यागम्यतेरामेण काशीईयतेविश्वेश्वरेण
गङ्गोदकंपीयतेधार्मिकेण वाराणसीव्रज्यतेरुद्रेण ४ हरीव्रज्यतेपरिव्राजकेन इत्यादि हारके
ति उक्तेसतिकर्म्मणिप्रथमागम्यते क्रियाहरिणेति अत्रनामिहिनकर्त्तरिलतीया एवमन्य
त्रापितेषामेवधातूनांयदालः कर्मणिचेत्यादिनाकर्मणिलकाराभवन्ति तदोक्तेसतिकर्मे
भवति तत्रोक्तेसतिकर्म्मणि प्रातिपदिकेत्यादिनाप्रथमाविभक्तिर्भवति उक्तंहि सकर्मका

काराविधीयन्ते तदानभिहिते हेतुकर्त्तरि कर्त्तृकरणयोस्तृतीयेतितृतीयाविभक्तिर्भवति उक्तं
हि प्रवृत्तौवानिवृत्तौवा यः स्वतंत्रः प्रयोजयेत् हेतुकर्त्ताभवेद्वैस उक्तानुक्तभिदाद्विधः १
एकधः कर्म्मकर्त्ता यथास्वयमेवपच्यते ओदनः स्वयमेवभिद्यतेकाष्टं स्वयमेवलूयते
केदारः स्वयमेवछिद्यते प्राकृतजनः स्नेहः स्वयमप्ययंपच्यते क्रिया ओदनः कर्म्मक
र्त्ता एवमन्यत्रापिकाष्टादौ यत्रकाष्टादि क्रियायामोदनादयः कर्त्तुरेवहेतुलाभव
ति अनापाकेनकर्त्तुः पाकादयोजायन्ते तत्रोच्यते स्वयमेवपच्यते ओदनः इत्यादि त
त्र सकर्मकाधातवोद्विधाभवंति कर्त्तृस्थक्रियाश्च तत्रैककर्मस्थक्रियापचत्यादयस्तेषा
मेवधातूनांप्रयोगेकर्म्मवत्कर्म्मणातुल्यक्रियाइत्यनेन यदाकर्त्तुः कर्म्मवद्भावोविधीय
तेतदाकर्त्तुः कर्म्मवद्भावाद्धातूनांयोगादात्मनेपदेविणवद्भावाभवति यथाचि ओदनः

नभिहितहेतुकर्त्ता च तत्राभिहितहेतुकर्त्ता यथा हितं लभन्ते विनीताः तान् विनीतान् धीरः
हितं लभमानः प्रयुङ्क्ते हितं लभयति विनीतान् धीरः विनययुक्तान् हितं लाभीष्टं प्राप
यतीत्यर्थः हितमनभिहितकर्म्म लभयति क्रिया विनीतान् कर्म्म धीरो हेतुकर्त्ता यथा
गच्छति गृहं शिशुः गमयति शिशुं पिता तथा अवगच्छति शास्त्रं शिष्यः अवगमयति
शास्त्रं शिष्यं गुरुः भुंक्ते अन्नं बालः भोजयत्यन्नं बालं पितेत्यादि यदा णिजन्ताद्धातोः
लः कर्म्मणि चेत्यादिना कर्त्तरि लकारा विधीयन्ते तदा अभिहितहेतुकर्त्ता भवति अथा
भिहितहेतुकर्त्ता यथा हितं लभन्ते विनीता धीरेणा सत्यार्थः हितमनभिहितकर्म्म ल
भ्यन्ते क्रिया विनीता अभिहितकर्तृकर्म्म धीरेणेत्यनभिहितहेतुकर्त्तरि तृतीया एवङ्ग
म्यते गृहं बालेन अवगम्यते शास्त्रं शिष्यो गुरुणा भोज्यतेऽन्नं बालः पित्रेत्यादि डुलभष् प्रा
प्तौ गम्लृ गतौ भुज पालनाभ्यवहारयोरित्यादीनां णिजन्तानां लः कर्म्मणि चेत्यादिना कर्म्मल

कर्त्तरि प्रातिपदिकार्थेति प्रथमाविभक्तिर्भवति तदुक्तम् यस्मिन्नर्थे विधीयन्ते लका
रास्तद्भिन्नाः कृत्तः समासो वा भवेद्यत्र स उक्तः प्रथमान्वित इति १ यथापुरुषद्भूरोति
श्राद्धं नरस्यापि स एवार्थः पुरुषमभिहितद्भू कर्मक्रियते क्रियाश्राद्धेनेत्यनभिहित
त्वात्कर्त्तरि तृतीया एवं श्रीशाय्यते दत्तैः विद्या उपास्यते श्रुतिभिः राज्यते
विश्वेश्वरेण काश्यनाम् भास्यते चन्द्रेण गगने द्योत्यते द्वारकायां हरिणा इत्यादि
तेषामेव धातूनां लः केनादिना कर्मणि भावे लकारा भवन्ति तदानभिहितत्व
तन्त्र कर्त्तरि कर्त्तृकरणयोस्तृतीया भवति तदुक्तम् यदा कर्मणि भावे च विधी
यन्ते लडादयः अनुक्तस्तु तदा कर्त्ता तृतीया तत्र निश्चिता १ उभयत्र स्वतन्त्रः क
र्त्तेति कर्तृसंज्ञा भवति यष्टा च निष्टा च कारकानाय ईश्वरः अस्वतन्त्रः कर्त्ता १
स्यादुक्तानुक्तभिदा द्विधा द्विविधो हेतुकर्त्ता यथाऽभिहितहेतुकर्त्ता नयन्तो